ॐ अद्भ्यः सम्भृतः पृथिव्व्यै रसाच्च व्विश्वकर्म्मणः समवर्त्तताग्ग्रे ॥
तस्य त्वष्टा व्विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्ग्रे ॥१॥

व्वेदाहमेतम्पुरुषम्महान्तमादित्त्यवर्ण्णन्तमसःपरस्तात् ॥
तमेव व्विदित्त्वाति मृत्युमेति नान्यः पन्था व्विद्यतेऽयनाय ॥२॥

प्रजापतिश्चरति गर्ब्भेऽअन्तरजायमानो बहुधा व्विजायते ॥
तस्य योनिम्परि पश्यन्ति धीरास्तस्मिन्न्ह तस्थुर्भुवनानि व्विश्वा ॥३॥

यो देवेभ्यऽ आतपति यो देवानाम्पुरोहितः ॥
पूर्व्वो यो देवेभ्यो जातो नमो रुचाय ब्ब्राह्मये ॥४॥

रुचम्ब्राह्मञ्जनयन्तो देवाऽ अग्ग्रे तदब्ब्रुवन् ॥
यस्त्वैवम्ब्राह्मणो व्विद्यात्तस्य देवाऽ असन्वशे ॥५॥

श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥
इष्णन्निषाणामुम्मऽ इषाण सर्व्वलोकम्मऽ इषाण—स्वाहा ॥६॥

ॐ आशुः शिशानो व्वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ॥
सङ्क्रन्दनोऽनिमिषऽ एकवीरः शत ठं० सेनाऽ अजयत्साकमिन्द्रः ॥१॥

सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ॥
तदिन्द्रेण जयत तत्सहध्वं य्युधो नरऽ इषुहस्तेन व्वृष्णा ॥२॥

सऽ इषुहस्तैः स निषङ्गिभिर्व्वशी सँस्स्रष्टा स युधऽ इन्द्रो गणेन ॥
स ठं० सृष्टजित्सोमपा बाहुशर्द्ध्युग्रधन्वा प्प्रतिहिताभिरस्ता ॥३॥

बृहस्पते परि दीया रथेन रक्षोहाऽमित्राँ ऽ२ अपबाधमानः ॥
प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेद्ध्यविता रथानाम् ॥४॥

बलविज्ञायः स्थविरः प्प्रवीरः सहस्वान्वाजी सहमानऽ उग्ग्रः ॥
अभिवीरोऽ अभिसत्त्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥५॥

गोत्रभिदङ्गोविदं व्वज्रबाहुञ्जयन्तमज्मप्प्रमृणन्तमोजसा ॥
इम ठं० सजाताऽअनु वीरयध्वमिन्द्र ठं० सखायोऽअनु स ठं० रभध्वम् ॥६॥

अभि गोत्राणि सहसा गाहमानोऽदयो व्वीरः शतमन्युरिन्द्रः ॥
दुश्च्यवनः पृतनाषाडयुद्ध्योऽस्माक ठं० सेनाऽ अवतु प्प्रयुत्सु ॥७॥

इन्द्रऽ आसान्नेता बृहस्पतिर्द्दक्षिणा यज्ञः पुरऽएतु सोमः ॥
देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्ग्रम् ॥८॥

इन्द्रस्य व्वृष्णो व्वरुणस्य राज्ञऽआदित्यानाम्मरुता ॐ शर्द्धऽ उग्ग्रम् ॥
महामनसाम्भुवनच्च्यवानाङ्घोषो देवानाञ्जयतामुदस्थात् ॥९॥

उद्धर्षय मघवन्नायुधान्युत्सत्त्वनाम्मामकानाम्मना ॐ सि ॥
उद् वृत्रहन्वाजिनां व्वाजिनान्युद्रथानाञ्जयताँय्यन्तु घोषाः ॥१०॥

अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकँ य्याऽइषवस्ता जयन्तु ॥
अस्माकं व्वीराऽ उत्तरे भवन्त्वस्माँ २ऽ उ देवाऽ अवता हवेषु ॥११॥

अमीषाञ्चित्तम्प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ॥
अभि प्प्रेहि निर्द्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम्—स्वाहा ॥१२॥

ॐ व्विभ्राड्बृहत्पिबतु सोम्यम्मद्ध्वायुर्द्दधद्यज्ञपतावविह्रुतम् ॥
व्वातजूतो योऽअभिरक्षति त्मना प्प्रजाः पुपोष पुरुधा व्विराजति ॥१॥

उदु त्यञ्जातवेदसन्देवं व्वहन्ति केतवः दृशे व्विश्वाय सूर्य्यम् ॥२॥

येना पावक चक्षसा भुरण्यन्तञ्जनाँ २ऽ अनु ॥
त्वं व्वरुण पश्यसि ॥३॥

दैव्व्यावद्ध्वर्य्यूऽ आगत ठं० रथेन सूर्य्यत्त्वचा मद्ध्वा यज्ञ ठं० समञ्जाथे ॥
तम्प्रत्नथायं व्वेनश्चित्रन्देवानाम् ॥४॥

तम्प्रत्नथा पूर्व्वथा व्विश्वथेमथा ज्ज्येष्ठतातिम्बर्हिषद ॐ स्वर्व्विदम् ॥
प्रतीचीनं व्वृजनन्दोहसे धुनिमाशुञ्जयन्तमनु यासु व्वर्द्धसे ॥५॥

अयं व्वेनश्चोदयत्पृश्निगर्भा ज्ज्योतिर्ज्जरायू रजसो व्विमाने ॥
इममपाॐ सङ्गमे सूर्य्यस्य शिशुन्न व्विप्प्रा मतिभो रिहन्ति ॥६॥

चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्य व्वरुणस्याग्नेः ॥
आप्प्रा द्यावापृथिवीऽ अन्तरिक्ष ठं० सूर्य्यऽ आत्मा जगतस्तस्थुषश्च ॥७॥

आ नऽ इडाभिर्व्विदथे सुशस्ति व्विश्वानरः सविता देवऽ एतु ॥
अपि यथा युवानो मत्सथा नो व्विश्वञ्जगदभिपित्वे मनीषा ॥८॥

यद्द्य कच्च व्वृत्रहन्नुदगाऽ अभि सूर्य्य ॥
सर्व्वन्तदिन्द्र ते व्वशे ॥९॥

तरणिर्व्विश्वदर्शतो ज्ज्योतिष्कृदसि सूर्य्य ॥
व्विश्व माभासि रोचनम् ॥१०॥

तत्सूर्य्यस्य देवत्वन्तन्महित्वम्मद्ध्या कर्त्तोर्व्विततं ठं० सञ्जभार ॥
यदेदयुक्त हरितः सधस्थादाद्रात्री व्वासस्तनुते सिमस्मै ॥११॥

तन्मित्रस्य व्वरुणस्याभिचक्षे सूर्य्यो रूपङ्कृणुते द्योरुपस्थे ॥
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति ॥१२॥

बण्महाँ २ऽ असि सूर्य्य बडादित्य महाँ २ऽ असि ॥
महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ २ऽ असि ॥१३॥

बट्सूर्य्य श्रवसा महाँ २ऽ असि सत्रा देव महाँ २ऽ असि ॥
मह्ना देवानामसुर्य्यःपुरोहितो व्विभु ज्ज्योतिरदाभ्यम् ॥१४॥

श्रायन्तऽ इव सूर्यं व्विश्वेदिन्द्रस्य भक्षत ॥
व्वसूनि जाते जनमानऽओजसा प्रति भागन्न दीधिम ॥१५॥

अद्या देवाऽ उदिता सूर्य्यस्य निर ठं० हसः पिपृता निरवद्यात् ॥
तन्नो मित्रो व्वरुणो मामहन्तामदितिः सिन्धुः पृथिवीऽ उत द्यौः ॥१६॥

आ कृष्णेन रजसा व्वर्तमानो निवेशयन्नमृतम्मर्त्यञ्च ॥
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्—स्वाहा ॥१७॥

ॐ नमस्ते रुद्र मन्यवऽ उतो तऽ इषवे नमः ॥
बाहुभ्यामुत ते नमः ॥१॥

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ॥
तया नस्तन्वा शन्तमया गिरिशन्ताभि चाकशीहि ॥२॥

या॒मिषु॒ङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे ।।
शिवाङ्गिरित्र ताङ्कुरु मा हि ठं॰ सीः पुरुषञ्जगत् ।।३।।

शिवेन वचसा त्वा गिरिशाच्छा व्वदामसि ।।
य॒था नः सर्व्वमिज्जगदयक्ष्म ठं॰ सुमनाऽ असत् ।।४।।

अद्ध्यवोचदधिवक्ता प्प्रथमो दैव्व्यो भिषक् ।।
अहींश्च सर्व्वाञ्जम्भयन्त्सर्व्वाश्च या॒तुधान्योऽधराचीः परा सुव ।।५।।

असौ य॒स्ताम्म्रोऽअरुणऽउत बभ्रुः सुमङ्गलः ।।
ये चैन ठं॰ रुद्राऽ अभितो दिक्षु श्रिताः सहस्त्रशोऽवैषा ॳ हेडऽईमहे ।।६।।

असौ यो॒ऽवसर्प्पति नीलग्रीवो व्विलोहितः ।।
उतैनङ्गोपाऽअदृश्रन्नदृश्रन्नुदहार्य्यः स दृष्टो मृडयाति नः ।।७।।

नमोऽस्तु नीलग्रीवाय सहस्त्राक्षाय मीढुषे ।।
अथो येऽअस्य सत्वानोऽहन्तेभ्योऽकरन्नमः ।।८।।

प्रमुञ्च धन्वनस्त्वमु॒भयोरात्न्योंर्ज्ज्याम् ।।
या॒श्च ते हस्तऽ इषवः परा ता भगवो व्वप ।।९।।

व्विज्ज्यन्धनुः कपर्द्दिनो व्विशल्यो बाणवाँ २ऽ उत ।।
अनेशन्नस्य या॒ऽ इषवऽ आभुरस्य निषङ्गधिः । १०।।

या॒ ते हेतिर्म्मीढुष्टम हस्ते बभूव ते धनुः ।।
तयास्मान्विश्वतस्त्वमयक्ष्मया परि भुज ।।११।।

परि ते धन्वनो हेतिरस्मान्वृणक्तु व्विश्वतः ।।
अथो य॒ऽइषुधिस्तवारेऽ अस्मन्निधेहि तम् ।।१२।।

अवतत्त्य धनुष्ट्व ठं॰ सहस्त्राक्ष शतेषुधे ।।
निशीर्य्य॒ शल्यानाम्मुखा शिवो नः सुमना भव ।।१३।।

नमस्तऽ आयुधायानातताय धृष्णवे ।।
उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने ।।१४।।

मा नो महान्तमुत मा नोऽअर्भकम्मा नऽ उक्षन्तमुत मा नऽ उक्षितम् ।।
मा नो व्वधीः पितरम्मोत मातरम्मा नः प्प्रियास्तन्वो रुद्र रीरिषः ।।१५।।

मा नस्तोके तनये मा नऽ आयुषि मा नो गोषु मा नोऽ अश्वेषु रीरिषः ।।
मा नो व्वीरान् रुद्र भामिनो व्वधीर्हविष्मन्तः सदमित्त्वा हवामहे—स्वाहा ।।१६।।

ॐ नमस्ते रुद्र मन्यवऽ उतो तऽ इषवे नमः ।।
बाहुभ्यामुत ते नमः—स्वाहा ।।१।।

ॐ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ।।
तया नस्तन्वा शन्तमया गिरिशन्ताभि चाकशीहि—स्वाहा ।।२।।

ॐ यामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे ।।
शिवाङ्गिरित्र ताङ्कुरु मा हि ठं०सीः पुरुषञ्जगत् स्वाहा ।।३।।

ॐ शिवेन व्वचसा त्त्वा गिरिशाऽच्छा व्वदामसि ।।
यथा नः सर्व्वमिज्जगदयक्ष्म ठं० सुमनाऽअसत् स्वाहा ।।४।।

ॐ अद्ध्यवोचदधिवक्ता प्प्रथमो दैव्यो भिषक् ।।
अहींश्च सर्व्वाञ्जम्भयन्त्सर्व्वाश्च यातुधान्योऽधराचीः परा सुव स्वाहा ।।५।।

ॐ असौ यस्ताम्म्रोऽ अरुणऽ उत बभ्रुः सुमङ्गलः ।।
ये चैन ठं० रुद्राऽ अभितो दिक्षु श्रिताः सहस्रशोऽवैषा ॐ
हेडऽ ईमहे स्वाहा ।।६।।

ॐ असौ योऽवसर्प्पति नीलग्रीवो व्विलोहितः ।।
उतैनङ्गोपाऽअदृश्रन्नदृश्रन्नुदहार्य्यः स दृष्टो मृडयाति नः स्वाहा ।।७।।

ॐ नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।।
अथो येऽअस्य सत्त्वानोऽहन्तेभ्योऽकरन्नमः स्वाहा ।।८।।

ॐ प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्ज्याम् ।।
याश्च ते हस्तऽइषवः परा ता भगवो व्वप स्वाहा ।।९।।

ॐ व्विज्ज्यन्धनुः कपर्द्दिनो व्विशल्यो बाणवाँ २ऽ उत ।।
अनेशन्नस्य याऽ इषवऽ आभुरस्य निषङ्गधिः स्वाहा ।।१०।।

ॐ या ते हेतिर्म्मीढुष्टम हस्ते बभूव ते धनुः ।।
तयास्मान्विश्वतस्त्वमयक्ष्मया परि भुज स्वाहा ।।११।।

ॐ परि ते धन्वनो हेतिरस्मान्वृणक्तु व्विश्वतः ॥
अथो य इषुधिस्तवारेऽ अस्मन्निधेहि तम्-स्वाहा ॥१२॥

ॐ अवतत्त्य धनुष्ट्व ꣳ सहस्राक्ष शतेषुधे ॥
निशीर्य्य शल्यानाम्मुखा शिवो नः सुमना भव स्वाहा ॥१३॥

ॐ नमस्तऽआयुधायानातताय धृष्णवे ॥
उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने स्वाहा ॥१४॥

ॐ मा नो महान्तमुत मा नोऽअर्भकम्मा नऽउक्षन्तमुत मा नऽ उक्षितम् ॥
मा नो व्वधीः पितरम्मोत मातरम्मा नः प्प्रियास्तन्वो रुद्र
रीरिषः स्वाहा ॥१५॥

ॐ मा नस्तोके तनये मा नऽ आयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः ॥
मा नो व्वीरान्रुद्र भामिनो व्वधीर्हविष्मन्तः सदमित्त्वा
हवामहे--स्वाहा ॥१६॥

ॐ नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमः स्वाहा ॥१७॥

ॐ नमो व्वृक्षेभ्यो हरिकेशेभ्यः पशूनाम्पतये नमः स्वाहा ॥१८॥

ॐ नमः शष्पिञ्जराय त्त्विषीमते पथीनाम्पतये नमः स्वाहा ॥१९॥

ॐ नमो हरिकेशायोपवीतिने पुष्टानाम्पतये नमः स्वाहा ॥२०॥

ॐ नमो बभ्लुशाय व्व्याधिनेऽन्नानाम्पतये नमः स्वाहा ॥२१॥

ॐ नमो भवष्य हेत्यै जगताम्पतये नमः स्वाहा ॥२२॥

ॐ नमो रुद्रायाततायिने क्षेत्राणाम्पतये नमः स्वाहा ॥२३॥

ॐ नमः सूतायाहन्त्यै व्वनानाम्पतये नमः स्वाहा ॥२४॥

ॐ नमो रोहिताय स्स्थपतये व्वृक्षाणाम्पतये नमः स्वाहा ॥२५॥

ॐ नमो भुवन्तये व्वारिवस्कृतायौषधीनाम्पतये नमः स्वाहा ॥२६॥

ॐ नमो मन्त्रिणे व्वाणिजाय कक्षाणाम्पतये नमः स्वाहा ॥२७॥

ॐ नमऽउच्चैर्घोषायाक्रन्दयते पत्तीनाम्पतये नमः स्वाहा ॥२८॥

ॐ नमः कृत्स्नायतया धावते सत्त्वनाम्पतये नमः स्वाहा ॥२९॥

ॐ नमः सहमानाय निव्व्याधिनऽ आव्व्याधिनीनाम्पतये नमः स्वाहा ॥३०॥

ॐ नमो निषङ्गिणे ककुभाय स्तेनानाम्पतये नमः—स्वाहा ॥३१॥

ॐ नमो निचेरवे परिचरायारण्यानाम्पतये नमः स्वाहा ॥३२॥

ॐ नमो वञ्चते परिवञ्चते स्तायूनाम्पतये नमः स्वाहा ॥३३॥

ॐ नमो निषङ्गिणऽ इषुधिमते तस्कराणाम्पतये नमः स्वाहा ॥३४॥

ॐ नमः सृकायिभ्यो जिघा ँ सद्भ्यो मुष्णताम्पतये नमः स्वाहा ॥३५॥

ॐ नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः स्वाहा ॥३६॥

ॐ नमऽउष्णीषिणे गिरिचराय कुलुञ्चानाम्पतये नमः स्वाहा ॥३७॥

ॐ नमऽइषुमद्भ्यो धन्वायिभ्यश्च वो नमः स्वाहा ॥३८॥

ॐ नमऽ आतन्वानेभ्यः प्प्रतिदधानेभ्यश्च वो नमः स्वाहा ॥३९॥

ॐ नमऽ आयच्छद्भ्योऽस्यद्भ्यश्च वो नमः स्वाहा ॥४०॥

ॐ नमो व्विसृजद्भ्यो विद्ध्यद्भ्यश्च वो नमः स्वाहा ॥४१॥

ॐ नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः स्वाहा ॥४२॥

ॐ नमः शयानेभ्यऽआसीनेभ्यश्च वो नमः स्वाहा ॥४३॥

ॐ नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः स्वाहा ॥४४॥

ॐ नमः सभाभ्यः सभापतिभ्यश्च वो नमः स्वाहा ॥४५॥

ॐ नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमः स्वाहा ॥४६॥

ॐ नमऽ आव्याधिनीभ्यो व्विविद्ध्यन्तीभ्यश्च वो नमः स्वाहा ॥४७॥

ॐ नमऽउगणाभ्यस्तृ ठं० हतीभ्यश्च वो नमः स्वाहा ॥४८॥

ॐ नमो गणेभ्यो गणपतिभ्यश्च वो नमः स्वाहा ॥४९॥

ॐ नमो व्व्रातेभ्यो व्व्रातपतिभ्यश्च वो नमः स्वाहा ॥५०॥

ॐ नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः स्वाहा ॥५१॥

ॐ नमो व्विरूपेभ्यो व्विश्वरूपेभ्यश्च वो नमः स्वाहा ॥५२॥

ॐ नमः सेनाभ्यः सेनानिभ्यश्च वो नमः स्वाहा ॥५३॥

ॐ नमो रथिभ्योऽअरथेभ्यश्च वो नमः स्वाहा ॥५४॥

ॐ नमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमः-स्वाहा ॥५५॥

ॐ नमो महद्भ्योऽअर्भकेभ्यश्च वो नमः स्वाहा ॥५६॥

ॐ नमस्तक्षभ्यो रथकारेभ्यश्चवो नमः स्वाहा ॥५७॥

ॐ नमः कुलालेभ्यः कर्म्मारेभ्यश्च वो नमः स्वाहा ॥५८॥

ॐ नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमः स्वाहा ॥५९॥

ॐ नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः स्वाहा ॥६०॥

ॐ नमः श्वभ्यः श्वपतिभ्यश्च वो नमः स्वाहा ॥६१॥

ॐ नमो भवाय च रुद्राय च स्वाहा ॥६२॥

ॐ नमः शर्व्वाय च पशुपतये च स्वाहा ॥६३॥

ॐ नमो नीलग्रीवाय च शितिकण्ठाय च स्वाहा ॥६४॥

ॐ नमः कपर्द्दिने च व्युप्तकेशाय च स्वाहा ॥६५॥

ॐ नमः सहस्राक्षाय च शतधन्वने च स्वाहा ॥६६॥

ॐ नमो गिरिशयाय च शिपिविष्टाय च स्वाहा ॥६७॥

ॐ नमो मीढुष्टमाय चेषुमते च स्वाहा ॥६८॥

ॐ नमो ह्रस्वाय च व्वामनाय च स्वाहा ॥६९॥

ॐ नमो बृहते च व्वर्षीयसे च स्वाहा ॥७०॥

ॐ नमो व्वृद्धाय च सवृधे च स्वाहा ॥७१॥

ॐ नमोऽग्र्याय च प्प्रथमाय च स्वाहा ॥७२॥

ॐ नमऽ आशवे चाजिराय च स्वाहा ॥७३॥

ॐ नमः शीघ्र्याय च शीभ्याय च स्वाहा ॥७४॥

ॐ नमऽ ऊर्म्म्याय चावस्वन्याय च स्वाहा ॥७५॥

ॐ नमो नादेयाय च द्वीप्याय च स्वाहा ॥७६॥

ॐ नमो ज्ज्येष्ठाय च कनिष्ठाय च स्वाहा ॥७७॥

ॐ नमः पूर्व्वजाय चापरजाय च स्वाहा ॥७८॥

ॐ नमो मद्ध्यमाय चापगल्भाय च स्वाहा ॥७९॥

ॐ नमो जघन्याय च बुध्न्याय च–स्वाहा ॥८०॥

ॐ नमः सोभ्याय च प्प्रतिसर्य्याय च स्वाहा ॥८१॥

ॐ नमो याम्म्याय च क्षेम्म्याय च स्वाहा ॥८२॥

ॐ नमः श्लोक्याय चावसान्याय च स्वाहा ॥८३॥

ॐ नम ऽ उर्व्वर्य्याय च खल्याय च स्वाहा ॥८४॥

ॐ नमो व्वन्याय च कक्ष्याय च स्वाहा ॥८५॥

ॐ नमः श्रवाय च प्प्रतिश्रवाय च स्वाहा ॥८६॥

ॐ नमऽ आशुषेणाय चाशुरथाय च स्वाहा ॥८७॥

ॐ नमः शूराय चावभेदिने च स्वाहा ॥८८॥

ॐ नमो बिल्म्मिने च कवचिने च स्वाहा ॥८९॥

ॐ नमो व्वर्म्मिणे च व्वरूथिने च स्वाहा ॥९०॥

ॐ नमः श्रुताय च श्रुतसेनाय च स्वाहा ॥९१॥

ॐ नमो दुन्दुभ्याय चाहनन्याय च स्वाहा ॥९२॥

ॐ नमो धृष्णवे च प्प्रमृशाय च स्वाहा ॥९३॥

ॐ नमो निषङ्गिणे चेषुधिमते च स्वाहा ॥९४॥

ॐ नमस्तीक्ष्णेषवे चायुधिने च स्वाहा ॥९५॥

ॐ नमः स्वायुधाय च सुधन्वने च स्वाहा ॥९६॥

ॐ नमः स्रुत्याय च पत्थ्याय च स्वाहा ॥९७॥

ॐ नमः काट्याय च नीप्प्याय च स्वाहा ॥९८॥

ॐ नमः कुल्याय च सरस्याय च स्वाहा ॥९९॥

ॐ नमो नादेयाय च व्वैशन्ताय च स्वाहा ॥१००॥

ॐ नमः कूप्प्याय चावट्याय च स्वाहा ॥१०१॥

ॐ नमो व्वीद्ध्याय चातप्प्याय च स्वाहा ॥१०२॥

ॐ नमो मेग्घ्याय च विद्युत्याय च स्वाहा ॥१०३॥

ॐ नमो व्वर्ष्याय चावर्ष्याय च स्वाहा ॥१०४॥

ॐ नमो व्वार्य्याय च रेष्म्याय च–स्वाहा ॥१०५॥

ॐ नमो व्वास्तव्व्याय च व्वास्तुपाय च स्वाहा ॥१०६॥

ॐ नमः सोमाय च रुद्राय च स्वाहा ॥१०७॥

ॐ नमस्ताम्म्राय चारुणाय च स्वाहा ॥१०८॥

ॐ नमः शङ्गवे च पशुपतये च स्वाहा ॥१०९॥

ॐ नमऽ उग्ग्राय च भीमाय च स्वाहा ॥११०॥

ॐ नमोऽग्रेवधाय च दूरेवधाय च स्वाहा ॥१११॥

ॐ नमो हन्त्रे च हनीयसे च स्वाहा ॥११२॥

ॐ नमो व्वृक्षेभ्यो हरिकेशेभ्यः स्वाहा ॥११३॥

ॐ नमस्ताराय स्वाहा ॥११४॥

ॐ नमः शम्भवाय च मयोभवाय च स्वाहा ॥११५॥

ॐ नमः शङ्कराय च मयस्कराय च स्वाहा ॥११६॥

ॐ नमः शिवाय च शिवतराय च स्वाहा ॥११७॥

ॐ नमः पार्य्याय चावार्य्याय च स्वाहा ॥११८॥

ॐ नमः प्प्रतरणाय चोत्तरणाय च स्वाहा ॥११९॥

ॐ नमस्तीर्त्थ्याय च कूल्ल्याय च स्वाहा ॥१२०॥

ॐ नमः शष्प्याय च फेन्याय च स्वाहा ॥१२१॥

ॐ नमः सिकत्त्याय च प्रवाह्याय च स्वाहा ॥१२२॥

ॐ नमः कि ठं० शिलाय च क्षयणाय च स्वाहा ॥१२३॥

ॐ नमः कपर्द्दिने च पुलस्तये च स्वाहा ॥१२४॥

ॐ नमऽ इरिण्याय च प्प्रपत्थ्याय च स्वाहा ॥१२५॥

ॐ नमो व्व्रज्ज्याय च गोष्ठ्याय च स्वाहा ॥१२६॥

ॐ नमस्तल्प्याय च गेह्याय च स्वाहा ॥१२७॥

ॐ नमो हृदय्याय च निवेष्प्याय च स्वाहा ॥१२८॥

ॐ नमः काट्ट्याय च गह्व्वरेष्ठाय च स्वाहा ॥१२९॥

ॐ नमः शुष्क्याय च हरित्याय च–स्वाहा ॥१३०॥

ॐ नमः पाᳬंसव्याय च रजस्याय च स्वाहा ॥१३१॥

ॐ नमो लोप्याय चोलप्याय च स्वाहा ॥१३२॥

ॐ नमऽ ऊर्व्याय च सूर्व्याय च स्वाहा ॥१३३॥

ॐ नमः पर्ण्णाय च पर्ण्णशदाय च स्वाहा ॥१३४॥

ॐ नमऽ उद्गुरमाणाय चाभिघ्नते च स्वाहा ॥१३५॥

ॐ नमऽ आखिदते च प्रखिदते च स्वाहा ॥१३६॥

ॐ नमऽ इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमः स्वाहा ॥१३७॥

ॐ नमो वः किरिकेभ्यो देवाना ᳬ हृदयेभ्यः स्वाहा ॥१३८॥

ॐ नमो विचिन्वत्केभ्यो देवाना ᳬ हृदयेभ्यः स्वाहा ॥१३९॥

ॐ नमो विक्षिणत्केभ्यो देवाना ᳬ हृदयेभ्यः स्वाहा ॥१४०॥

ॐ नमऽ आनिर्हतेभ्यो देवाना ᳬ हृदयेभ्यः स्वाहा ॥१४१॥

ॐ द्रापेऽ अन्धसस्पते दरिद्र नीललोहित ॥
आसाम्प्रजानामेषाम्पशूनाम्मा भेर्म्मा रोङ्मो च नः किञ्चनाममत्
स्वाहा ॥१४२॥

ॐ इमा रुद्राय तवसे कपर्द्दिने क्षयद्वीराय प्रभरामहे मतीः यथा शमसद्-
द्विपदे चतुष्पदे विश्वम्पुष्टङ्ग्रामेऽ अस्मिन्ननातुरम् स्वाहा ॥१४३॥

ॐ या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी ॥
शिवा रुतस्य भेषजी तया नो मृड जीवसे स्वाहा ॥१४४॥

ॐ परि नो रुद्रस्य हेतिर्व्वृणक्तु परि त्वेषस्य दुर्म्मतिरघायोः ॥
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड स्वाहा ॥१४५॥

ॐ मीढुष्टम शिवतम शिवो नः सुमना भव ॥
परमे वृक्षऽ आयुधन्निधाय कृत्तिं व्वसानऽ आचर पिनाकम्बिभ्रदागहि
स्वाहा ॥१४६॥

ॐ विकिरिद्र विलोहित नमस्तेऽ अस्तु भगवः ॥
यास्ते सहस्र ᳬ हेतयोऽन्यमस्मन्निवपन्तु ताः स्वाहा ॥१४७॥

ॐ सहस्राणि सहस्रशो बाह्वोस्तव हेतयः ॥
तासामीशानो भगवः पराचीना मुखा कृधि स्वाहा ॥१४८॥

ॐ असङ्ख्याता सहस्राणि ये रुद्द्राऽ अधि भूम्म्याम् ॥
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥१४९॥

ॐ अस्मिन्महत्त्यर्ण्णवेऽन्तरिक्षे भवाऽ अधि ॥
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥१५०॥

ॐ नीलग्ग्रीवाः शितिकण्ठा दिव ꣳ रुद्द्राऽ उपश्रिताः ॥
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥१५१॥

ॐ नीलग्ग्रीवाः शितिकण्ठा शर्व्वा अधः क्षमाचराः ॥
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥१५२॥

ॐ ये व्वृक्षेषु शष्पिञ्जरा नीलग्ग्रीवा व्विलोहिताः ॥
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥१५३॥

ॐ ये भूतानामधिपतयो व्विशिखासः कपर्द्दिनः ॥
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥१५४॥

ॐ ये पथाम्पथिरक्षयऽ ऐलवृदा आयुर्य्युधः ॥
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥१५५॥

ॐ ये तीर्थानि प्प्रचरन्ति सृकाहस्ता निषङ्गिणः ॥
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥१५६॥

ॐ येऽन्नेषु व्विविद्ध्यन्ति पात्रेषु पिबतो जनान् ॥
तेषांꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥१५७॥

ॐ यऽएतावन्तश्च भूयाꣳसश्च दिशो रुद्द्रा व्वितस्थिरे ॥
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥१५८॥

ॐ नमोऽस्तु रुद्द्रेभ्यो ये दिवि येषां व्वर्षमिषवः ॥ तेभ्यो दश प्प्राचीर्द्दश दक्षिणा दश प्प्रतीचीर्द्दशोदीचीर्द्दशोर्ध्वाः ॥ तेभ्यो नमोऽ अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दद्ध्मः स्वाहा ॥१५९॥

ॐ नमोऽस्तु रुद्द्रेभ्यो येऽन्तरिक्षे येषां व्वातऽइषवः ।। तेभ्यो दश प्प्राचीर्द्दश दक्षिणा दश प्प्रतीचीर्द्दशोदीचीर्द्दशोर्ध्वाः ।। तेभ्यो नमोऽ अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दद्ध्मः स्वाहा ।।१६०।।

ॐ नमोऽस्तु रुद्द्रेभ्यो ये पृथिव्व्यां य्येषामन्नमिषवः ।। तेभ्यो दश प्प्राचीर्द्दश दक्षिणा दश प्प्रतीचीर्द्दशोदीचीर्द्दशोर्ध्वाः ।। तेभ्यो नमोऽ अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दद्ध्मः स्वाहा ।।१६१।।

ॐ व्वय ठं० सोम व्व्रते तव मनस्तनूषु बिब्भ्रतः ।। प्रजावन्तः सचेमहि ।।१।।

एष ते रुद्द्र भागः सह स्वस्राम्बिकया तञ्जुषस्व स्वाहैष ते रुद्द्र भागऽ आखुस्ते पशुः ।।२।।

अव रुद्द्रमदीमह्यव देवन्त्र्यम्बकम् ।। यथा नो व्वस्यसस्क्करद्यथा नः श्श्रेयसस्क्करद्यथा नो व्व्यवसाययात् ।।३।।

भेषजमसि भेषजङ्गवेऽश्वाय पुरुषाय भेषजम् ।। सुखम्मेषाय मेष्यै ।।४।।

त्र्यम्बकँ य्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ।। उर्व्वारुकमिव बन्धनान्मृत्त्योर्म्मुक्षीय मामृतात् ।। त्र्यम्बकँ य्यजामहे सुगन्धिम्पतिवेदनम् ।। उर्व्वारुकमिव बन्धनादितो- मुक्षीय मामुतः ।।५।।

एतत्ते रुद्द्रावसन्तेन परो मूजवतोऽतीहि ।। अवततधन्वा पिनाकावसः कृत्तिवासाऽ अहि ठं०सन्नः शिवोऽतीहि ।।६।।

त्र्यायुषञ्जमदग्ग्नेः कश्यपस्य त्र्यायुषम् ।। यद्देवेषु त्र्यायुषन्तन्नोऽ अस्तु त्र्यायुषम् ।।७।।

शिवो नामासि स्वधितिस्ते पिता नमस्तेऽ अस्तु मा मा हि ठं०सीः ।। नि वर्त्तयाम्स्या- युषेऽन्नाद्याय प्प्रजननाय रायस्पोषाय सुप्प्रजास्त्वाय सुवीर्य्याय ।।८।। (पाठमात्रम्)

ॐ उग्ग्रश्च भीमश्चद्ध्वान्तश्च धुनिश्च ।। सासह्व्वाँश्चाभियुग्वा च व्विक्षिपः स्वाहा ।।१।।

अग्ग्नि ठं० हृदयेनाशनि ठं० हृदयाग्ग्रेण पशुपतिङ्कृत्स्नहृदयेन भवँ य्यक्ना ।। शर्व्व- म्मतस्नाभ्यामीशानम्मन्युना महादेवमन्तः पर्शव्व्येनोग्ग्रन्देवं व्वनिष्ठुना व्वसिष्ठहनुः शिङ्गीनि कोश्याभ्याम् ।।२।।

उग्ग्रँल्लोहितेन मित्र ठं० सौव्व्रत्येन रुद्द्रन्दौर्व्व्रत्त्येनेन्द्रम्प्रक्रीडेन मरुतो बलेन साद्ध्यान्प्रमुदा ।। भवस्य कण्ठच ठं० रुद्द्रस्यान्तः पार्श्व्यम्महादेवस्य यकृच्छर्व्वस्य व्वनिष्ठुः पशुपतेः पुरीतत् ।।३।।

लोमभ्यः स्वाहा लोमभ्यः स्वाहा त्वचे स्वाहा त्वचे स्वाहा लोहिताय स्वाहा लोहिताय स्वाहा मेदोभ्यः स्वाहा मेदोभ्यः स्वाहा ।। माᳬसेभ्यः स्वाहा माᳬसेभ्यः स्वाहा स्नावभ्यः स्वाहा स्नावभ्यः स्वाहास्त्थभ्यः स्वाहास्त्थभ्यः स्वाहा मज्जभ्यः स्वाहा मज्जभ्यः स्वाहा ।। रेतसे स्वाहा पायवे स्वाहा ।।४।।

आयासाय स्वाहा प्प्रायासाय स्वाहा सँय्यासाय स्वाहा व्वियासाय स्वाहोद्यासाय स्वाहा ।। शुचे स्वाहा शोचते स्वाहा शोचमानाय स्वाहा शोकाय स्वाहा ।।५।।

तपसे स्वाहा तप्प्यते स्वाहा तप्प्यमानाय स्वाहा तप्ताय स्वाहा घर्म्माय स्वाहा ।। निष्कृत्त्यै स्वाहा प्प्रायश्चित्त्यै स्वाहा भेषजाय स्वाहा ।।६।।

यमाय स्वाहान्तकाय स्वाहा मृत्त्यवे स्वाहा ।। ब्रह्मणे स्वाहा ब्ब्रह्महत्त्यायै स्वाहा व्विश्वेभ्यो देवेभ्यः स्वाहा द्यावापृथिवीभ्याᳬ स्वाहा ।।७।। (पाठमात्रम्)

ॐ व्वाजश्च मे प्प्रसवश्च मे प्प्रयतिश्च मे प्प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रवश्च मे श्रुतिश्च मे ज्ज्योतिश्च मे यज्ञेन कल्पन्ताम् ।।१।।

प्राणश्च मेऽपानश्च मे व्व्यानश्च मेऽसुश्च मे चित्तश्च मऽ आधीतश्च मे व्वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रश्च मे दक्षश्च मे बलश्च मे यज्ञेन कल्पन्ताम् ।।२।।

ओजश्च मे सहश्च मऽ आत्मा च मे तनूश्च मे शर्म्म च मे व्वर्म्म च मेऽङ्गानि च मेऽस्थीनि च मे परूᳬषि च मे शरीराणि च मऽ आयुश्च मे जरा च मे यज्ञेन कल्पन्ताम् ।।३।।

ज्यैष्ठ्यञ्च मऽ आधिपत्त्यञ्च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे व्वरिमा च मे प्प्रथिमा च मे व्वर्षिमा च मे द्द्राघिमा च मे वृद्धञ्च मे व्वृद्धिश्च मे यज्ञेन कल्पन्ताम्—स्वाहा ।।४-१।।

सत्यश्च मे श्रद्धा च मे जगच्च मे धनञ्च मे व्विश्वञ्च मे महश्च मे क्क्रीडा च मे मोदश्च मे जातञ्च मे जनिष्यमाणञ्च मे सूक्तञ्च मे सुकृतञ्च मे यज्ञेन कल्पन्ताम् ॥५॥

ऋतञ्च मेऽमृतञ्च मेऽयक्ष्मञ्च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्त्वञ्च मेऽनमित्रञ्च मेऽभयञ्च मे सुखञ्च मे शयनञ्च मे सूषाश्च मे सुदिनञ्च मे यज्ञेन कल्पन्ताम् ॥६॥

यन्ता च मे धर्त्ता च मे क्षेमश्च मे धृतिश्च मे व्विश्वञ्च मे महश्च मे सँव्विच्च मे ज्ञात्रञ्च मे सूश्च मे प्प्रसूश्च मे सीरञ्च मे लयश्च मे यज्ञेन कल्पन्ताम् ॥७॥

शञ्च मे मयश्च मे प्प्रियञ्च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भगश्च मे द्द्रविणञ्च मे भद्द्रञ्च मे श्रेयश्च मे व्वसीयश्च मे यशश्च मे यज्ञेन कल्पन्ताम्—स्वाहा ॥८-२॥

ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतञ्च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे व्वृष्टिश्च मे जैत्रञ्च मऽ औद्भिद्यञ्च मे यज्ञेन कल्पन्ताम् ॥९॥

रयिश्च मे रायश्च मे पुष्टञ्च मे पुष्टिश्च मे व्विभु च मे प्प्रभु च मे पूर्णञ्च मे पूर्णतरञ्च मे कुयवञ्च मेऽक्षितञ्च मेऽन्नञ्च मेऽक्षुच्च मे यज्ञेन कल्पन्ताम् ॥१०॥

व्वित्तञ्च मे व्वेद्यञ्च मे भूतञ्च मे भविष्यच्च मे सुगञ्च मे सुपत्थ्यञ्च मऽ ऋद्धञ्च मऽ ऋद्धिश्च्च मे क्लृप्तञ्च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे यज्ञेन कल्पन्ताम् ॥११॥

व्व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्प्रियङ्ग-वश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम्—स्वाहा ॥१२-३॥

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्व्वताश्च मे सिकताश्च मे व्वनस्पतयश्च मे हिरण्यञ्च मेऽयश्च मे श्यामञ्च मे लोहञ्च मे सीसञ्च मे त्रपु च मे यज्ञेन कल्पन्ताम् ॥१३॥

अग्निश्च मऽ आपश्च मे व्वीरुधश्च मऽ ओषधयश्च मे कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे ग्ग्राम्याश्च मे पशवऽ आरण्याश्च मे व्वित्तञ्च मे व्वित्तिश्च मे भूतञ्च मे भूतिश्च मे यज्ञेन कल्पन्ताम् ॥१४॥

व्वसु च मे व्वसतिश्च मे कर्म्म च मे शक्तिश्च मेऽर्थश्च मऽ एमश्च मऽ इत्या च मे गतिश्च मे यज्ञेन कल्पन्ताम्—स्वाहा । १५-४॥

अग्निश्च मऽ इन्द्रश्च मे सोमश्च मऽ इन्द्रश्च मे सविता च मऽ इन्द्रश्च मे सरस्वती च मऽइन्द्रश्च मे पूषा च मऽ इन्द्रश्च मे बृहस्पतिश्च मऽ इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥१६॥

मित्रश्च मऽ इन्द्रश्च मे व्वरुणश्च मऽ इन्द्रश्च मे धाता च मऽ इन्द्रश्च मे त्वष्टा च मऽ इन्द्रश्च मे मरुतश्च मऽ इन्द्रश्च मे व्विश्वे च मे देवाऽ इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥१७॥

पृथिवी च मऽ इन्द्रश्च मेऽन्तरिक्षञ्च मऽ इन्द्रश्च मे द्यौश्च मऽ इन्द्रश्च मे समाश्च मऽ इन्द्रश्च मे नक्षत्राणि च मऽ इन्द्रश्च मे दिशश्च मऽ इन्द्रश्च मे यज्ञेन कल्पन्ताम् —स्वाहा ॥१८-५॥

अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च मऽ उपाꣳशुश्च मेऽन्तर्य्यामश्च मऽ ऐन्द्रवायवश्च मे मैत्रावरुणश्च मऽ आश्विनश्च मे प्प्रतिप्प्रस्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्पन्ताम् ॥१९॥

आग्ग्रयणश्च मे व्वैश्वदेवश्च मे ध्रुवश्च मे व्वैश्वानरश्च मऽ ऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्वतीयाश्च मे निष्क्केवल्यश्च मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्पन्ताम् ॥२०॥

स्रुचश्च मे चमसाश्च मे व्वायव्व्यानि च मे द्रोणकलशश्च मे ग्ग्रावाणश्च मेऽधिषवणे च मे पूतभृतच्च मऽ आधवनीयश्च मे व्वेदिश्च मे बर्हिश्च मेऽवभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्पन्ताम्—स्वाहा ॥२१-६॥

अग्निश्च मे घर्म्मश्च मेऽर्क्कश्च मे सूर्य्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मे ऽदितिश्च मे दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्वरयो दिशश्च मे यज्ञेन कल्पन्ताम् ॥२२॥

व्रतश्च मऽ ऋतवश्च मे तपश्च मे संव्वत्सरश्च मेऽहोरात्रेऽ ऊर्व्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम्—स्वाहा ॥२३-७॥

एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च मऽ एकादश च मऽ एकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च मऽ एकवि ठं० शतिश्च मऽ एकवि ठं० शतिश्च मे त्रयोवि ठं० शतिश्च मे त्रयोवि ठं० शतिश्च मे पञ्चवि ठं०शतिश्च मे पञ्चवि ठं०शतिश्च मे सप्तवि ठं०शतिश्च मे सप्तवि ठं०शतिश्च मे नववि ठं० शतिश्च मे नववि ठं०शतिश्च मऽ एकत्रि ठं० शच्च मऽ एकत्रि ठं०शच्च मे त्रयस्त्रि ठं० शच्च मे यज्ञेन कल्पन्ताम्—स्वाहा ॥२४-८॥

चतस्रश्च मेऽष्टौ च मेऽष्टौ च मे द्वादश च मे द्वादश च मे षोडश च मे षोडश च मे व्वि ठं० शतिश्च मे व्वि ठं०शतिश्च मे चतुर्व्वि ठं० शतिश्च मे चतुर्वि ठं० शतिश्च मेऽष्टावि ठं० शतिश्च मेऽष्टावि ठं० शतिश्च मे द्वात्रि ठं० शच्च मे द्वात्रि ठं० शच्च मे षट्त्रि ठं० शच्च मे षट्त्रि ठं० शच्च मे चत्वारि ठं० शच्च मे चत्त्वारि ठं० शच्च मे चतुश्चत्त्वारि ठं० शच्च मे चतुश्चत्त्वारि ठं० शच्च मेऽष्टाचत्त्वारि ठं० शच्च मे यज्ञेन कल्पन्ताम्—स्वाहा ॥२५-९॥

त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्य्यवाट् च मे तुर्य्यौही च मे यज्ञेन कल्पन्ताम् ॥२६॥

पष्ठवाट् च मे पष्ठौही च मऽ उक्षा च मे व्वशा च मऽ ऋषभश्च मे व्वेहच्च मेऽनड्वाँश्च मे धेनुश्च मे यज्ञेन कल्पन्ताम्—स्वाहा ॥२७-१०॥

व्वाजाय स्वाहा प्प्रसवाय स्वाहाऽपिजाय स्वाहा क्क्रतवे स्वाहा व्वसवे स्वाहाऽहर्प्पतये स्वाहाह्न्ने मुग्धाय स्वाहा मुग्धाय व्वैन ठं॰ शिनाय स्वाहा व्विन ठं॰ शिनऽ आन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाऽधिपतये स्वाहा प्प्रजापतये स्वाहा ॥ इयन्ते राण्मित्राय यन्तासि यमनऽ ऊर्ज्जे त्वा व्वृष्ट्यै त्वा प्प्रजानान्त्वाधिपत्त्याय ॥२८॥

आयुर्य्यज्ञेन कल्पताम्प्राणो यज्ञेन कल्पताञ्चक्षुर्य्यज्ञेन कल्पताᳪ श्रोत्रय्यज्ञेन कल्पतां व्वाग्यज्ञेन कल्पताम्मनो यज्ञेन कल्पतामात्मा यज्ञेन कल्पताम्ब्रह्मा यज्ञेन कल्पता ज्ज्योतिर्य्यज्ञेन कल्पताᳪ स्वर्य्यज्ञेन कल्पताम्पृष्ठँ य्यज्ञेन कल्पताँ य्यज्ञो यज्ञेन कल्पताम् ॥ स्तोमश्च यजुश्चऽ ऋक्च साम च बृहच्च रथन्तरञ्च ॥ स्वर्द्देवाऽ अगन्मामृताऽ अभूम प्प्रजापतेः प्प्रजाऽ अभूम व्वेट् स्वाहा ॥२९-११॥

ॐ ऋचं व्वाचम्प्र पद्ये मनो यजुः प्प्र पद्ये साम प्प्राणम्प्र पद्ये चक्षुः श्रोत्रम्प्र पद्ये ॥
व्वागोजः सहौजो मयि प्प्राणापानौ स्वाहा ॥१॥

ॐ यन्मे च्छिद्द्रञ्चक्षुषो हृदयस्य मनसो वातितृण्णम्बृहस्पतिर्म्मे तद्दधातु ॥
शन्नो भवतु भुवनस्य यस्पतिः स्वाहा ॥२॥

(उपांशु) ॐ भूर्भुवः स्वः ॥ तत्सवितुर्व्वरेण्यम्भर्गो देवस्य धीमहि ॥
धियो यो नः प्प्रचोदयात् स्वाहा ॥३॥

ॐ कया नश्चित्रऽ आ भुवदूती सदावृधः सखा ॥
कया शचिष्ठया व्वृता स्वाहा ॥४॥

ॐ कस्त्वा सत्यो मदानाम्म ठं॰ हिष्ठो मत्सदन्धसः ॥
दृढा चिदारुजे व्वसु स्वाहा ॥५॥

ॐ अभीषु णः सखीनामविता जरितॄणाम् ॥
शतम्भवास्यूतिभिः स्वाहा ॥६॥

ॐ कया त्वन्नऽ ऊत्त्याभि प्प्र मन्दसे व्वृषन् ॥
कया स्तोतृभ्यऽ आ भर स्वाहा ॥७॥

ॐ इन्द्रो व्विश्वस्य राजति ॥
शन्नोऽ अस्तु द्विपदे शञ्चतुष्पदे स्वाहा ॥८॥

ॐ शन्नो मित्रः शं व्वरुणः शन्नो भवत्त्वर्य्यमा ॥
शन्नऽ इन्द्रो बृहस्पतिः शन्नो व्विष्णुरुरुक्रमः स्वाहा ॥९॥

ॐ शन्नो व्वातः पवताॅं शन्नस्तपतु सूर्य्यः ॥
शन्नः कनिक्रदद्देवः पर्ज्जन्योऽ अभि वर्षतु स्वाहा ॥१०॥

ॐ अहानि शम्भवन्तु नः श ठं० रात्रीः प्प्रति धीयताम् ॥
शन्नऽ इन्द्राग्नी भवतामवोभिः शन्नऽ इन्द्रावरुणा रातहव्व्या ॥
शन्नऽ इन्द्रापूषणा व्वाजसातौ शमिन्द्रासोमा सुविताय शँय्योः स्वाहा ॥११॥

ॐ शन्नो देवीरभिष्टयऽ आपो भवन्तु पीतये ॥
शँय्योरभि स्रवन्तु नः स्वाहा ॥१२॥

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥
यच्छा नः शर्म्म सप्प्रथाः स्वाहा ॥१३॥

ॐ आपो हि ष्ठा मयोभुवस्ता न ऊर्ज्जे दधातन ॥
महे रणाय चक्षसे स्वाहा ॥१४॥

ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः ॥
उशतीरिव मातरः स्वाहा ॥१५॥

ॐ तस्माऽ अरङ्गमाम वो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः स्वाहा ॥१६॥

ॐ द्यौः शान्तिरन्तरिक्ष ठं० शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ॥
व्वनस्पतयः शान्तिर्व्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्व्व ठं० शान्तिः शान्तिरेव शान्तिः
सा मा शान्तिरेधि स्वाहा ॥१७॥

ॐ दृते दृ ठं०ह मा मित्रस्य मा चक्षुषा सर्व्वाणि भूतानि समीक्षन्ताम् ॥
मित्रस्याहञ्चक्षुषा सर्व्वाणि भूतानि समीक्षे ॥
मित्रस्य चक्षुषा समीक्षामहे स्वाहा ॥१८॥

ॐ दृते दृ ठं०ह मा ॥
ज्योक्ते सन्दृशि जीव्व्यासञ्ज्योक्ते सन्दृशि जीव्व्यासम् स्वाहा ॥१९॥

ॐ नमस्ते हरसे शोचिषे नमस्तेऽ अस्त्वर्चिषे ॥
अन्याँस्तेऽ अस्मत्तपन्तु हेतयः पावकोऽ अस्मभ्य ठं० शिवो भव स्वाहा ॥२०॥

ॐ नमस्तेऽ अस्तु व्विद्युते नमस्ते स्तनयित्नवे ॥
नमस्ते भगवन्नस्तु यतः स्वः समीहसे स्वाहा ॥२१॥

ॐ यतो यतः समीहसे ततो नोऽ अभयङ्कुरु ॥
शन्नः कुरु प्प्रजाभ्योऽभयन्नः पशुभ्यः स्वाहा ॥२२॥

ॐ सुमित्रिया नऽ आपऽ ओषधयः सन्तु दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च
व्वयन्द्विष्मः स्वाहा ॥२३॥

ॐ तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्क्रमुच्चरत् ॥
पश्येम शरदः शतञ्जीवेम शरदः शत ठं० शृणुयाम शरदः शतम्प्र ब्रवाम शरदः
शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् स्वाहा ॥२४॥

## अथ स्वस्तिमन्त्रपाठः

ॐ स्वस्ति नऽ इन्द्रो व्वृद्धश्रवाः स्वस्ति नः पूषा व्विश्ववेदाः ॥
स्वस्ति नस्तार्क्ष्योऽ अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्द्दधातु ॥१॥

पयः पृथिव्व्याम्पयऽ ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ॥
पयस्वतीः प्प्रदिशः सन्तु मह्यम् ॥२॥

व्विष्णो रराटमसि व्विष्णोः श्नप्त्रे स्थो व्विष्णोः स्यूरसि व्विष्णोर्ध्रुवोऽसि ॥
व्वैष्णवमसि व्विष्णवे त्वा ॥३॥

अग्निर्द्देवता व्वातो देवता सूर्य्यो देवता चन्द्रमा देवता व्वसवो देवता रुद्द्रा देवताऽऽदित्या
देवता मरुतो देवता व्विश्वेदेवा देवता बृहस्पतिर्द्देवतेन्द्रो देवता व्वरुणो देवता ॥४॥

ॐ सद्योजातम्प्रपद्यामि सद्योजाताय वै नमो नमः ॥
भवे भवे नातिभवे भवस्व माम्भवोद्भवाय नमः ॥५॥

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय
नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो
मनोन्मनाय नमः ॥६॥

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ॥
सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥७॥

तत्पुरुषाय विद्महे महादेवाय धीमहि ॥
तन्नो रुद्रः प्रचोदयात् ॥८॥

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ॥
ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽ अस्तु सदा शिवोऽम् ॥९॥

ॐ शिवो नामासि स्वधितिस्ते पिता नमस्तेऽ अस्तु मा मा हि ठं०सीः ॥
निवर्त्तयाम्म्यायुषेऽन्नाद्याय प्प्रजननाय रायस्पोषाय सुप्प्रजास्त्वाय सुवीर्य्याय ॥१०॥

ॐ व्विश्वानि देव सवितर्दुरितानि परा सुव ॥
यद्भद्रन्तन्नऽ आसुव ॥११॥

ॐ द्यौः शान्तिरन्तरिक्ष ठं० शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ॥
व्वनस्पतयः शान्तिर्व्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्व्व ठं० शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥१२॥

सुशान्तिर्भवतु

(लघुषडङ्गन्यासान् कृत्वा ध्यानं कुर्युः)

इति लघुषडङ्गन्यास-सहितः

—रुद्रस्वाहाकारः—

—: 0 :—

# श्री हरिहर भगवान् की आरती

ॐ जय हरिहर देवा श्री जय हरिहर देवा ॥
जग पालक-संहारक २ भव तारक देवा ॥ॐ जय०॥टेक॥

पूर्ण ब्रह्म परमात्मा तुम जगके स्वामी ॥हरि०॥
कृपा करो करुणामय २ प्रभु अन्तर्यामी ॥ॐ जय०॥१॥

सत्य सनातन सुन्दर तुम सबके स्वामी ॥शिव०॥
अविकारी अविनाशी २ अज अन्तर्यामी ॥ॐ जय०॥२॥

आदि अनादि अगोचर अविचल अविनाशी ॥हरि०॥
अतुल अनन्त अनामय २ अमित शक्तिराशी ॥ॐ जय०॥३॥

आदि अनन्त अनामय अकल कलाधारी ॥शिव०॥
अमल अरूप अगोचर २ अविचल अघहारी ॥ॐ जय०॥४॥

अमल अकल अज अक्षय अव्यय अविकारी ॥हरि०॥
सत-चित सुखमय सुन्दर २ हरि सत्ताधारी ॥ॐ जय०॥५॥

शुभ्र सौम्य सुरसरिधर शशिधर सुखकारो ॥शिव०॥
अति कमनीय शान्तिकर २ शिव मुनिमनहारी ॥ॐ जय०॥६॥

साक्षी शरण सखा प्रिय प्रियतम पूर्ण प्रभो ॥हरि०॥
केवल काल कलानिधि २ कालातीत विभो ॥ॐ जय०॥७॥

निर्गुण सगुण निरञ्जन जगमय नित्य प्रभो ॥शिव०॥
कालरूप केवल हर २ कालातीत विभो ॥ॐ जय०॥८॥

माता पिता पितामह स्वामि सुहृद् भर्ता ॥हरि०॥
विश्वोत्पादक पालक २ रक्षक संहर्ता ॥ॐ जय०॥९॥

रक्षक भक्षक प्रेरक प्रिय औढरदानी ॥शिव०॥
साक्षी परम अकर्ता २ कर्ता अभिमानी ॥ॐ जय०॥१०॥

आश्रय दान दयार्णव हम सबको दीजै ॥प्रभु०॥
पाप ताप हर हरि ! सब २ निज जन कर लीजै ॥ॐ जय०॥११॥

# स्तुतिपाठः

श्रीगणेशाय नमः

गोविन्द माधव मुकुन्द हरे मुरारे शम्भो शिवेश शशिशेखर शूलपाणे ।
दामोदराच्युत जनार्दन वासुदेव त्याज्या भटा य इति सन्ततमामनन्ति ॥१॥

गङ्गाधरान्धकरिपो हर नीलकण्ठ वैकुण्ठ कैटभरिपो कमठाब्जपाणे ।
भूतेश खण्डपरशो मृड चण्डिकेश त्याज्या भटा य इति सन्ततमामनन्ति ॥२॥

विष्णो नृसिंह मधुसूदन चक्रपाणे गौरीपते गिरिश शङ्कर चन्द्रचूड ।
नारायणासुरनिबर्हण शार्ङ्गपाणे त्याज्या भटा य इति सन्ततमामनन्ति ॥३॥

मृत्युञ्जयोग्र विषमेक्षण कामशत्रो श्रीकान्त पीतवसनाम्बुद नील शौरे ।
ईशान कृत्तिवसन त्रिदशैकनाथ त्याज्या भटा य इति सन्ततमामनन्ति ॥४॥

लक्ष्मीपते मधुरिपो पुरुषोत्तमाद्य श्रीकण्ठ दिग्वसन शान्त पिनाकपाणे ।
आनन्दकन्द धरणीधर पद्मनाभ त्याज्या भटा य इति सन्ततमामनन्ति ॥५॥

सर्वेश्वर त्रिपुरसूदन देवदेव ब्रह्मण्यदेव गरुडध्वज शङ्खपाणे ।
त्र्यक्षोरगाभरण बालमृगाङ्कमौले त्याज्या भटा य इति सन्ततमामनन्ति ॥६॥

श्रीराम राघव रमेश्वर रावणारे भूतेश मन्मथरिपो प्रमथाधिनाथ ।
चाणूरमर्दन हृषीकपते मुरारे त्याज्या भटा य इति सन्ततमामनन्ति ॥७॥

शूलिन् गिरीश रजनीश-कलावतंस कंसप्रणाशन सनातन केशिनाश ।
भर्ग त्रिनेत्र भव भूतपते पुरारे त्याज्या भटा य इति सन्ततमामनन्ति ॥८॥

गोपीपते यदुपते वसुदेवसूनो कर्पूरगौर वृषभध्वज भालनेत्र ।
गोवर्धनोद्धरण धर्मधुरीण गोप त्याज्या भटा य इति सन्ततमामनन्ति ॥९॥

स्थाणो त्रिलोचन पिनाकधरस्मरारे कृष्णानिरुद्ध कमलाकर कल्मषारे ।
विश्वेश्वर त्रिपथगार्द्रजटाकलाप त्याज्या भटा य इति सन्ततमामनन्ति ॥१०॥

यौ द्वौ शङ्खकपालभूषितकरौ मुक्तास्थिमालाधरौ
देवौ द्वारवतीश्मशाननिलयौ नागारिगोवाहनौ ।
द्वित्र्यक्षौ बलिदक्षयज्ञमथनौ श्रीशैलजावल्लभौ
पापं मे हरतामुभौ हरिहरौ श्रीवत्सगङ्गाधरौ ॥११॥

---

## नमस्कारः

धर्मार्थकाममोक्षाख्यचतुर्वर्गप्रदायिनौ ।
वन्दे हरिहरौ देवौ त्र्यैलोक्यपरिपायिनौ ॥१॥

एकमूर्तिर्द्विधाभिन्नौ संसारार्णवतारकौ ।
वन्देऽहं कामदौ देवौ सततं शिवकेशवौ ॥२॥

॥ श्रीः ॥

# श्रीविष्णोर्दिव्यसहस्रनामावलिः

विनियोगः—ॐ अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमालामन्त्रस्य भगवान् वेदव्यास ऋषिः । अनुष्टुप् छन्दः । श्रीकृष्णः परमात्मा देवता । आत्मयोनिः स्वयंजात इति बीजम् । देवकीनन्दनः स्रष्टेति शक्तिः । उद्भवः क्षोभणो देव इति परमो मन्त्रः । शङ्खभृन्नन्दको चक्रीति-कीलकम् । त्रिसामा सामगः सामेति कवचम् । शार्ङ्गधन्वा गदाधर-इत्यस्त्रम् । ॐ विश्वं विष्णुर्वषट्कार इति ध्यानम् । श्रीकृष्णप्रीत्यर्थे चतुर्विधपुरुषार्थसिद्ध्यर्थे दिव्यविष्णुसहस्रनामहोमे विनियोगः ॥ षडङ्गन्यासं कृत्वा ध्यायेत् ॥

## ध्यानम्

ॐ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥

| | | | | | |
|---|---|---|---|---|---|
| १ | ॐ विश्वस्मै | नमः | ११ | ॐ परमात्मने | नमः |
| २ | ,, विष्णवे | नमः | १२ | ,, मुक्तानां परमायै गतये | नमः |
| ३ | ,, वषट्काराय | नमः | १३ | ,, अव्ययाय | नमः |
| ४ | ,, भूतभव्यभवत्प्रभवे | नमः | १४ | ,, पुरुषाय | नमः |
| ५ | ,, भूतकृते | नमः | १५ | ,, साक्षिणे | नमः |
| ६ | ,, भूतभृते | नमः | १६ | ,, क्षेत्रज्ञाय | नमः |
| ७ | ,, भावाय | नमः | १७ | ,, अक्षराय | नमः |
| ८ | ,, भूतात्मने | नमः | १८ | ,, योगाय | नमः |
| ९ | ,, भूतभावनाय | नमः | १९ | ,, योगविदां नेत्रे | नमः |
| १० | ,, पूतात्मने | नमः | २० | ,, प्रधानपुरुषेश्वराय | नमः |

२१ ॐ नारसिंहवपुषे नमः
२२ ,, श्रीमते नमः
२३ ,, केशवाय नमः
२४ ,, पुरुषोत्तमाय नमः
२५ ,, सर्वस्मै नमः
२६ ,, शर्वाय नमः
२७ ,, शिवाय नमः
२८ ,, स्थाणवे नमः
२९ ,, भूतादये नमः
३० ,, निधिरव्ययाय नमः
३१ ,, सम्भवाय नमः
३२ ,, भावनाय नमः
३३ ,, भर्त्रे नमः
३४ ,, प्रभवाय नमः
३५ ,, प्रभवे नमः
३६ ,, ईश्वराय नमः
३७ ,, स्वयम्भुवे नमः
३८ ,, शम्भवे नमः
३९ ,, आदित्याय नमः
४० ,, पुष्कराक्षाय नमः
४१ ,, महास्वनाय नमः
४२ ,, अनादिनिधनाय नमः
४३ ,, धात्रे नमः
४४ ,, विधात्रे नमः
४५ ,, धातुरुत्तमाय नमः
४६ ,, अप्रमेयाय नमः
४७ ,, हृषीकेशाय नमः
४८ ,, पद्मनाभाय नमः
४९ ,, अमरप्रभवे नमः

५० ॐ विश्वकर्मणे नमः
५१ ,, मनवे नमः
५२ ,, त्वष्ट्रे नमः
५३ ,, स्थविष्ठाय नमः
५४ ,, स्थविरायध्रुवाय नमः
५५ ,, अग्राह्याय नमः
५६ ,, शाश्वताय नमः
५७ ,, कृष्णाय नमः
५८ ,, लोहिताक्षाय नमः नमः
५९ ,, प्रतर्दनाय नमः
६० ,, प्रभूताय नमः
६१ ,, त्रिककुब्धाम्ने नमः
६२ ,, पवित्राय नमः
६३ ,, मङ्गलायपरस्मै नमः
६४ ,, ईशानाय नमः
६५ ,, प्राणदाय नमः
६६ ,, प्राणाय नमः
६७ ,, ज्येष्ठाय नमः
६८ ,, श्रेष्ठाय नमः
६९ ,, प्रजापतये नमः
७० ,, हिरण्यगर्भाय नमः
७१ ,, भूगर्भाय नमः
७२ ,, माधवाय नमः
७३ ,, मधुसूदनाय नमः
७४ ,, ईश्वराय नमः
७५ ,, विक्रमिणे नमः
७६ ,, धन्विने नमः
७७ ,, मेधाविने नमः
७८ ,, विक्रमाय नमः

| | | | | | |
|---|---|---|---|---|---|
| ७९ | ॐ क्रमाय | नमः | १०८ | ॐ सम्मिताय | नमः |
| ८० | ,, अनुत्तमाय | नमः | १०९ | ,, समाय | नमः |
| ८१ | ,, दुराधर्षाय | नमः | ११० | ,, अमोघाय | नमः |
| ८२ | ,, कृतज्ञाय | नमः | १११ | ,, पुण्डरीकाक्षाय | नमः |
| ८३ | ,, कृतये | नमः | ११२ | ,, वृषकर्मणे | नमः |
| ८४ | ,, आत्मवते | नमः | ११३ | ,, वृषाकृतये | नमः |
| ८५ | ,, सुरेशाय | नमः | ११४ | ,, रुद्राय | नमः |
| ८६ | ,, शरणाय | नमः | ११५ | ,, बहुशिरसे | नमः |
| ८७ | ,, शर्मणे | नमः | ११६ | ,, बभ्रवे | नमः |
| ८८ | ,, विश्वरेतसे | नमः | ११७ | ,, विश्वयोनये | नमः |
| ८९ | ,, प्रजाभवाय | नमः | ११८ | ,, शुचिश्रवसे | नमः |
| ९० | ,, अह्ने | नमः | ११९ | ,, अमृताय | नमः |
| ९१ | ,, संवत्सराय | नमः | १२० | ,, शाश्वतस्थाणवे | नमः |
| ९२ | ,, व्यालाय | नमः | १२१ | ,, वरारोहाय | नमः |
| ९३ | ,, प्रत्ययाय | नमः | १२२ | ,, महातपसे | नमः |
| ९४ | ,, सर्वदर्शनाय | नमः | १२३ | ,, सर्वगाय | नमः |
| ९५ | ,, अजाय | नमः | १२४ | ,, सर्वविद्भानवे | नमः |
| ९६ | ,, सर्वेश्वराय | नमः | १२५ | ,, विष्वक्सेनाय | नमः |
| ९७ | ,, सिद्धाय | नमः | १२६ | ,, जनार्दनाय | नमः |
| ९८ | ,, सिद्धये | नमः | १२७ | ,, वेदाय | नमः |
| ९९ | ,, सर्वादये | नमः | १२८ | ,, वेदविदे | नमः |
| १०० | ,, अच्युताय | नमः | १२९ | ,, अव्यङ्गाय | नमः |
| १०१ | ,, वृषाकपये | नमः | १३० | ,, वेदाङ्गाय | नमः |
| १०२ | ,, अमेयात्मने | नमः | १३१ | ,, वेदविदे | नमः |
| १०३ | ,, सर्वयोगविनिःसृताय | नमः | १३२ | ,, कवये | नमः |
| १०४ | ,, वसवे | नमः | १३३ | ,, लोकाध्यक्षाय | नमः |
| १०५ | ,, वसुमनसे | नमः | १३४ | ,, सुराध्यक्षाय | नमः |
| १०६ | ,, सत्याय | नमः | १३५ | ,, धर्माध्यक्षाय | नमः |
| १०७ | ,, समात्मने | नमः | १३६ | ,, कृताऽकृताय | नमः |

१३७ ॐ चतुरात्मने नमः
१३८ ,, चतुर्व्यूहाय नमः
१३९ ,, चतुर्दंष्ट्राय नमः
१४० ,, चतुर्भुजाय नमः
१४१ ,, भ्राजिष्णवे नमः
१४२ ,, भोजनाय नमः
१४३ ,, भोक्त्रे नमः
१४४ ,, सहिष्णवे नमः
१४५ ,, जगदादिजाय नमः
१४६ ,, अनघाय नमः
१४७ ,, विजयाय नमः
१४८ ,, जेत्रे नमः
१४९ ,, विश्वयोनये नमः
१५० ,, पुनर्वसवे नमः
१५१ ,, उपेन्द्राय नमः
१५२ ,, वामनाय नमः
१५३ ,, प्रांशवे नमः
१५४ ,, अमोघाय नमः
१५५ ,, शुचये नमः
१५६ ,, ऊर्जिताय नमः
१५७ ,, अतीन्द्राय नमः
१५८ ,, सङ्ग्रहाय नमः
१५९ ,, सर्गाय नमः
१६० ,, धृतात्मने नमः
१६१ ,, नियमाय नमः
१६२ ,, यमाय नमः
१६३ ,, वेद्याय नमः
१६४ ,, वैद्याय नमः
१६५ ,, सदायोगिने नमः
१६६ ॐ वीरघ्ने नमः
१६७ ,, माधवाय नमः
१६८ ,, मधवे नमः
१६९ ,, अतीन्द्रियाय नमः
१७० ,, महामायाय नमः
१७१ ,, महोत्साहाय नमः
१७२ ,, महाबलाय नमः
१७३ ,, महाबुद्धये नमः
१७४ ,, महावीर्याय नमः
१७५ ,, महाशक्तये नमः
१७६ ,, महाद्युतये नमः
१७७ ,, अनिर्देश्यवपुषे नमः
१७८ ,, श्रीमते नमः नमः
१७९ ,, अमेयात्मने नमः
१८० ,, महाद्रिधृषे नमः
१८१ ,, महेष्वासाय नमः
१८२ ,, महीभर्त्रे नमः
१८३ ,, श्रीनिवासाय नमः
१८४ ,, सताङ्गतये नमः
१८५ ,, अनिरुद्धाय नमः
१८६ ,, सुरानन्दाय नमः
१८७ ,, गोविन्दाय नमः
१८८ ,, गोविदाम्पतये नमः
१८९ ,, मरीचये नमः
१९० ,, दमनाय नमः
१९१ ,, हंसाय नमः
१९२ ,, सुपर्णाय नमः
१९३ ,, भुजगोत्तमाय नमः
१९४ ,, हिरण्यनाभाय नमः

| | | | | | |
|---|---|---|---|---|---|
| १९५ | ॐ सुतपसे | नमः | २२४ | ॐ सहस्रमूर्ध्ने | नमः |
| १९६ | ,, पद्मनाभाय | नमः | २२५ | ,, विश्वात्मने | नमः |
| १९७ | ,, प्रजापतये | नमः | २२६ | ,, सहस्राक्षाय | नमः |
| १९८ | ,, अमृत्यवे | नमः | २२७ | ,, सहस्रपदे | नमः |
| १९९ | ,, सर्वदृशे | नमः | २२८ | ,, आवर्त्तनाय | नमः |
| २०० | ,, सिंहाय | नमः | २२९ | ,, निवृत्तात्मने | नमः |
| २०१ | ,, सन्धात्रे | नमः | २३० | ,, संवृताय | नमः |
| २०२ | ,, सन्धिमते | नमः | २३१ | ,, सम्प्रमर्दनाय | नमः |
| २०३ | ,, स्थिराय | नमः | २३२ | ,, अहःसंवर्त्तकाय | नमः |
| २०४ | ,, अजाय | नमः | २३३ | ,, वह्नये | नमः |
| २०५ | ,, दुर्मर्षणाय | नमः | २३४ | ,, अनिलाय नमः | नमः |
| २०६ | ,, शास्त्रे | नमः | २३५ | ,, धरणीधराय | नमः |
| २०७ | ,, विश्रुतात्मने | नमः | २३६ | ,, सुप्रसादाय | नमः |
| २०८ | ,, सुरारिघ्ने | नमः | २३७ | ,, प्रसन्नात्मने | नमः |
| २०९ | ,, गुरवे | नमः | २३८ | ,, विश्वधृषे | नमः |
| २१० | ,, गुरुतमाय | नमः | २३९ | ,, विश्वभुग्विभवे | नमः |
| २११ | ,, धाम्ने | नमः | २४० | ,, सत्कर्त्रे | नमः |
| २१२ | ,, सत्याय | नमः | २४१ | ,, सत्कृताय | नमः |
| २१३ | ,, सत्यपराक्रमाय | नमः | २४२ | ,, साधवे | नमः |
| २१४ | ,, निमिषाय | नमः | २४३ | ,, जह्नवे | नमः |
| २१५ | ,, अनिमिषाय | नमः | २४४ | ,, नारायणाय | नमः |
| २१६ | ,, स्रग्विणे | नमः | २४५ | ,, नराय | नमः |
| २१७ | ,, वाचस्पतिरुदारधिये | नमः | २४६ | ,, असंख्येयाय | नमः |
| २१८ | ,, अग्रण्ये | नमः | २४७ | ,, अप्रमेयात्मने | नमः |
| २१९ | ,, ग्रामण्ये | नमः | २४८ | ,, विशिष्टाय | नमः |
| २२० | ,, श्रीमते | नमः | २४९ | ,, शिष्टकृते | नमः |
| २२१ | ,, न्यायाय | नमः | २५० | ,, शुचये | नमः |
| २२२ | ,, नेत्रे | नमः | २५१ | ,, सिद्धार्थाय | नमः |
| २२३ | ,, समीरणाय | नमः | २५२ | ,, सिद्धसङ्कल्पाय | नमः |

२५३ ॐ सिद्धिदाय नमः
२५४ ,, सिद्धिसाधनाय नमः
२५५ ,, वृषाहिने नमः
२५६ ,, वृषभाय नमः
२५७ ,, विष्णवे नमः
२५८ ,, वृषपर्वणे नमः
२५९ ,, वृषोदराय नमः
२६० ,, वर्द्धनाय नमः
२६१ ,, वर्द्धमानाय नमः
२६२ ,, विविक्ताय नमः
२६३ ,, श्रुतिसागराय नमः
२६४ ,, सुभुजाय नमः
२६५ ,, दुर्धराय नमः
२६६ ,, वाग्मिने नमः
२६७ ,, महेन्द्राय नमः
२६८ ,, वसुदाय नमः
२६९ ,, वसवे नमः
२७० ,, नैकरूपाय नमः
२७१ ,, बृहद्रूपाय नमः
२७२ ,, शिपिविष्टाय नमः
२७३ ,, प्रकाशनाय नमः
२७४ ,, ओजस्तेजोद्युतिधराय नमः
२७५ ,, प्रकाशात्मने नमः
२७६ ,, प्रतापनाय नमः
२७७ ,, ऋद्धाय नमः
२७८ ,, स्पष्टाक्षराय नमः
२७९ ,, मन्त्राय नमः
२८० ,, चन्द्रांशवे नमः
२८१ ,, भास्करद्युतये नमः
२८२ ॐ अमृतांशूद्भवाय नमः
२८३ ,, भानवे नमः
२८४ ,, शशिबिन्दवे नमः
२८५ ,, सुरेश्वराय नमः
२८६ ,, औषधाय नमः
२८७ ,, जगतःसेतवे नमः
२८८ ,, सत्यधर्मपराक्रमाय नमः
२८९ ,, भूतभव्यभवन्नाथाय नमः
२९० ,, पवनाय नमः
२९१ ,, पावनाय नमः
२९२ ,, अनलाय नमः
२९३ ,, कामघ्ने नमः
२९४ ,, कामकृते नमः
२९५ ,, कान्ताय नमः
२९६ ,, कामाय नमः
२९७ ,, कामप्रदाय नमः
२९८ ,, प्रभवे नमः
२९९ ,, युगादिकृते नमः
३०० ,, युगावर्त्ताय नमः
३०१ ,, नैकमायाय नमः
३०२ ,, महाशनाय नमः
३०३ ,, अदृश्याय नमः
३०४ ,, व्यक्तरूपाय नमः
३०५ ,, सहस्रजिते नमः
३०६ ,, अनन्तजिते नमः
३०७ ,, इष्टाय नमः
३०८ ,, विशिष्टाय नमः
३०९ ,, शिष्टेष्टाय नमः
३१० ,, शिखण्डिने नमः

३११ ॐ नहुषाय नमः
३१२ ,, वृषाय नमः
३१३ ,, क्रोधघ्ने नमः
३१४ ,, क्रोधकृते नमः
३१५ ,, कर्त्रे नमः
३१६ ,, विश्वबाहवे नमः
३१७ ,, महीधराय नमः
३१८ ,, अच्युताय नमः
३१९ ,, प्रथिताय नमः
३२० ,, प्राणाय नमः
३२१ ,, प्राणदाय नमः
३२२ ,, वासवानुजाय नमः
३२३ ,, अपांनिधये नमः
३२४ ,, अधिष्ठानाय नमः
३२५ ,, अप्रमत्ताय नमः
३२६ ,, प्रतिष्ठिताय नमः
३२७ ,, स्कन्दाय नमः
३२८ ,, स्कन्दधराय नमः
३२९ ,, धुर्याय नमः
३३० ,, वरदाय नमः
३३१ ,, वायुवाहनाय नमः
३३२ ,, वासुदेवाय नमः
३३३ ,, बृहद्भानवे नमः
३३४ ,, आदिदेवाय नमः
३३५ ,, पुरन्दराय नमः
३३६ ,, अशोकाय नमः
३३७ ,, तारणाय नमः
३३८ ,, ताराय नमः
३३९ ,, शूराय नमः
३४० ॐ शौरये नमः
३४१ ,, जनेश्वराय नमः
३४२ ,, अनुकूलाय नमः
३४३ ,, शतावर्ताय नमः
३४४ ,, पद्मिने नमः
३४५ ,, पद्मनिभेक्षणाय नमः
३४६ ,, पद्मनाभाय नमः
३४७ ,, अरविन्दाक्षाय नमः
३४८ ,, पद्मगर्भाय नमः
३४९ ,, शरीरभृते नमः
३५० ,, महदर्धये नमः
३५१ ,, ऋद्धाय नमः
३५२ ,, वृद्धात्मने नमः
३५३ ,, महाक्षाय नमः
३५४ ,, गरुडध्वजाय नमः
३५५ ,, अतुलाय नमः
३५६ ,, शरभाय नमः
३५७ ,, भीमाय नमः
३५८ ,, समयज्ञाय नमः
३५९ ,, हविर्हरये नमः
३६० ,, सर्वलक्षण लक्षण्याय नमः
३६१ ,, लक्ष्मीवते नमः
३६२ ,, समितिञ्जयाय नमः
३६३ ,, विक्षराय नमः
३६४ ,, रोहिताय नमः
३६५ ,, मार्गाय नमः
३६६ ,, हेतवे नमः
३६७ ,, दामोदराय नमः
३६८ ,, सहाय नमः

३६९ ॐ महीधराय नमः
३७० ,, महाभागाय नमः
३७१ ,, वेगवते नमः
३७२ ,, अमिताशनाय नमः
३७३ ,, उद्भवाय नमः
३७४ ,, क्षोभणाय नमः
३७५ ,, देवाय नमः
३७६ ,, श्रीगर्भाय नमः
३७७ ,, परमेश्वराय नमः
३७८ ,, करणाय नमः
३७९ ,, कारणाय नमः
३८० ,, कर्त्रे नमः
३८१ ,, विकर्त्रे नमः
३८२ ,, गहनाय नमः
३८३ ,, गुहाय नमः
३८४ ,, व्यवसायाय नमः
३८५ ,, व्यवस्थानाय नमः
३८६ ,, संस्थानाय नमः
३८७ ,, स्थानदाय नमः
३८८ ,, ध्रुवाय नमः
३८९ ,, परर्द्धये नमः
३९० ,, परमस्पष्टाय नमः
३९१ ,, तुष्टाय नमः
३९२ ,, पुष्टाय नमः
३९३ ,, शुभेक्षणाय नमः
३९४ ,, रामाय नमः
३९५ ,, विरामाय नमः
३९६ ,, विरजसे नमः
३९७ ,, मार्गाय नमः
३९८ ॐ नेयाय नमः
३९९ ,, नयाय नमः
४०० ,, अनयाय नमः
४०१ ,, वीराय नमः
४०२ ,, शक्तिमतां श्रेष्ठाय नमः
४०३ ,, धर्माय नमः
४०४ ,, धर्मविदुत्तमाय नमः
४०५ ,, वैकुण्ठाय नमः
४०६ ,, पुरुषाय नमः
४०७ ,, प्राणाय नमः
४०८ ,, प्राणदाय नमः
४०९ ,, प्रणवाय नमः
४१० ,, पृथवे नमः
४११ ,, हिरण्यगर्भाय नमः
४१२ ,, शत्रुघ्नाय नमः
४१३ ,, व्याप्ताय नमः
४१४ ,, वायवे नमः
४१५ ,, अधोक्षजाय नमः
४१६ ,, ऋतवे नमः
४१७ ,, सुदर्शनाय नमः
४१८ ,, कालाय नमः
४१९ ,, परमेष्ठिने नमः
४२० ,, परिग्रहाय नमः
४२१ ,, उग्राय नमः
४२२ ,, सम्वत्सराय नमः
४२३ ,, दक्षाय नमः
४२४ ,, विश्रामाय नमः
४२५ ,, विश्वदक्षिणाय नमः
४२६ ,, विस्ताराय नमः

४२७ ॐ स्थावरस्थाणवे नमः
४२८ ,, प्रमाणाय नमः
४२९ ,, बीजायाव्ययाय नमः
४३० ,, अर्थाय नमः
४३१ ,, अनर्थाय नमः
४३२ ,, महाकोशाय नमः
४३३ ,, महाभोगाय नमः
४३४ ,, महाधनाय नमः
४३५ ,, अनिर्विण्णाय नमः
४३६ ,, स्थविष्ठाय नमः
४३७ ,, भुवे नमः
४३८ ,, धर्मयूपाय नमः
४३९ ,, महामखाय नमः
४४० ,, नक्षत्रनेमये नमः
४४१ ,, नक्षत्रिणे नमः
४४२ ,, क्षमाय नमः
४४३ ,, क्षामाय नमः
४४४ ,, समीहनाय नमः
४४५ ,, यज्ञाय नमः
४४६ ,, इज्याय नमः
४४७ ,, महेज्याय नमः
४४८ ,, क्रतवे नमः
४४९ ,, सत्राय नमः
४५० ,, सताङ्गतये नमः
४५१ ,, सर्वदर्शिने नमः
४५२ ,, विमुक्तात्मने नमः
४५३ ,, सर्वज्ञाय नमः
४५४ ,, ज्ञानायोत्तमाय नमः
४५५ ,, सुव्रताय नमः

४५६ ॐ सुमुखाय नमः
४५७ ,, सूक्ष्माय नमः
४५८ ,, सुघोषाय नमः
४५९ ,, सुखदाय नमः
४६० ,, सुहृदे नमः
४६१ ,, मनोहराय नमः
४६२ ,, जितक्रोधाय नमः
४६३ ,, वीरबाहवे नमः
४६४ ,, विदारणाय नमः
४६५ ,, स्वापनाय नमः
४६६ ,, स्ववशाय नमः
४६७ ,, व्यापिने नमः
४६८ ,, नैकात्मने नमः
४६९ ,, नैककर्मकृते नमः
४७० ,, वत्सराय नमः
४७१ ,, वत्सलाय नमः
४७२ ,, वत्सिने नमः
४७३ ,, रत्नगर्भाय नमः
४७४ ,, धनेश्वराय नमः
४७५ ,, धर्मगुपे नमः
४७६ ,, धर्मकृते नमः
४७७ ,, धर्मिणे नमः
४७८ ,, सते नमः
४७९ ,, असते नमः
४८० ,, क्षराय नमः
४८१ ,, अक्षराय नमः
४८२ ,, अविज्ञात्रे नमः
४८३ ,, सहस्रांशवे नमः
४८४ ,, विधात्रे नमः

४८५ ॐ कृतलक्षणाय नमः
४८६ ,, गभस्तिनेमये नमः
४८७ ,, सत्वस्थाय नमः
४८८ ,, सिंहाय नमः
४८९ ,, भूतमहेश्वराय नमः
४९० ,, आदिदेवाय नमः
४९१ ,, महादेवाय नमः
४९२ ,, देवेशाय नमः
४९३ ,, देवभृद्गुरवे नमः
४९४ ,, उत्तराय नमः
४९५ ,, गोपतये नमः
४९६ ,, गोप्त्रे नमः
४९७ ,, ज्ञानगम्याय नमः
४९८ ,, पुरातनाय नमः
४९९ ,, शरीरभूतभृते नमः
५०० ,, भोक्त्रे नमः
५०१ ,, कपीन्द्राय नमः
५०२ ,, भूरिदक्षिणाय नमः
५०३ ,, सोमपाय नमः
५०४ ,, अमृतपाय नमः
५०५ ,, सोमाय नमः
५०६ ,, पुरुजिते नमः
५०७ ,, पुरुसत्तमाय नमः
५०८ ,, विनयाय नमः
५०९ ,, जयाय नमः
५१० ,, सत्यसन्धाय नमः
५११ ,, दाशार्हाय नमः
५१२ ,, सात्वताम्पतये नमः
५१३ ,, जीवाय नमः
५१४ ॐ विनयिता-साक्षिणे नमः
५१५ ,, मुकुन्दाय नमः
५१६ ,, अमितविक्रमाय नमः
५१७ ,, अम्भोनिधये नमः
५१८ ,, अनन्तात्मने नमः
५१९ ,, महोदधिशयाय नमः
५२० ,, अन्तकाय नमः
५२१ ,, अजाय नमः
५२२ ,, महार्हाय नमः
५२३ ,, स्वाभाव्याय नमः
५२४ ,, जितामित्राय नमः
५२५ ,, प्रमोदनाय नमः
५२६ ,, आनन्दाय नमः
५२७ ,, नन्दनाय नमः
५२८ ,, नन्दाय नमः
५२९ ,, सत्यधर्मणे नमः
५३० ,, त्रिविक्रमाय नमः
५३१ ,, महर्षये कपिलाचार्याय नमः
५३२ ,, कृतज्ञाय नमः
५३३ ,, मेदिनीपतये नमः
५३४ ,, त्रिपदाय नमः
५३५ ,, त्रिदशाध्यक्षाय नमः
५३६ ,, महाशृङ्गाय नमः
५३७ ,, कृतान्तकृते नमः
५३८ ,, महावराहाय नमः
५३९ ,, गोविन्दाय नमः
५४० ,, सुषेणाय नमः
५४१ ,, कनकाङ्गदिने नमः
५४२ ,, गुह्याय नमः

५४३ ॐ गभीराय नमः
५४४ ,, गहनाय नमः
५४५ ,, गुप्ताय नमः
५४६ ,, चक्रगदाधराय नमः
५४७ ,, वेधसे नमः
५४८ ,, स्वाङ्गाय नमः
५४९ ,, अजिताय नमः
५५० ,, कृष्णाय नमः
५५१ ,, दृढाय नमः
५५२ ,, सङ्कर्षणायाच्युताय नमः
५५३ ,, वरुणाय नमः
५५४ ,, वारुणाय नमः
५५५ ,, वृक्षाय नमः
५५६ ,, पुष्कराक्षाय नमः
५५७ ,, महामनसे नमः
५५८ ,, भगवते नमः
५५९ ,, भगघ्ने नमः
५६० ,, आनन्दिने नमः
५६१ ,, वनमालिने नमः
५६२ ,, हलायुधाय नमः
५६३ ,, आदित्याय नमः
५६४ ,, ज्योतिरादित्याय नमः
५६५ ,, सहिष्णवे नमः
५६६ ,, गतिसत्तमाय नमः
५६७ ,, सुधन्वने नमः
५६८ ,, खण्डपरशवे नमः
५६९ ,, दारुणाय नमः
५७० ,, द्रविणप्रदाय नमः
५७१ ,, दिविस्पृशे नमः

५७२ ॐ सर्वदृग्व्यासाय नमः
५७३ ,, वाचस्पतयेऽयोनिजाय नमः
५७४ ,, त्रिसाम्ने नमः
५७५ ,, सामगाय नमः
५७६ ,, साम्ने नमः
५७७ ,, निर्वाणाय नमः
५७८ ,, भेषजाय नमः
५७९ ,, भिषजे नमः
५८० ,, संन्यासकृते नमः
५८१ ,, शमाय नमः
५८२ ,, शान्ताय नमः
५८३ ,, निष्ठायै नमः
५८४ ,, शान्तये नमः
५८५ ,, परायणाय नमः
५८६ ,, शुभाङ्गाय नमः
५८७ ,, शान्तिदाय नमः
५८८ ,, स्रष्ट्रे नमः
५८९ ,, कुमुदाय नमः
५९० ,, कुवलेशयाय नमः
५९१ ,, गोहिताय नमः
५९२ ,, गोपतये नमः
५९३ ,, गोप्त्रे नमः
५९४ ,, वृषभाक्षाय नमः
५९५ ,, वृषप्रियाय नमः
५९६ ,, अनिवर्तिने नमः
५९७ ,, निवृत्तात्मने नमः
५९८ ,, संक्षेप्त्रे नमः
५९९ ,, क्षेमकृते नमः
६०० ,, शिवाय नमः

६०१ ॐ श्रीवत्सवक्षसे नमः
६०२ ,, श्रीवासाय नमः
६०३ ,, श्रीपतये नमः
६०४ ,, श्रीमतां वराय नमः
६०५ ,, श्रीदाय नमः
६०६ ,, श्रीशाय नमः
६०७ ,, श्रीनिवासाय नमः
६०८ ,, श्रीनिधये नमः
६०९ ,, श्रीविभावनाय नमः
६१० ,, श्रीधराय नमः
६११ ,, श्रीकराय नमः
६१२ ,, श्रेयसे नमः
६१३ ,, श्रीमते नमः
६१४ ,, लोकत्रयाश्रयाय नमः
६१५ ,, स्वक्षाय नमः
६१६ ,, स्वङ्गाय नमः
६१७ ,, शतानन्दाय नमः
६१८ ,, नन्दये नमः
६१९ ,, ज्योतिर्गणेश्वराय नमः
६२० ,, विजितात्मने नमः
६२१ ,, विधेयात्मने नमः
६२२ ,, सत्कीर्तये नमः
६२३ ,, छिन्नसंशयाय नमः
६२४ ,, उदीर्णाय नमः
६२५ ,, सर्वतश्चक्षुषे नमः
६२६ ,, अनीशाय नमः
६२७ ,, शाश्वतस्थिराय नमः
६२८ ,, भूशयाय नमः
६२९ ,, भूषणाय नमः

६३० ॐ भूतये नमः
६३१ ,, विशोकाय नमः
६३२ ,, शोकनाशनाय नमः
६३३ ,, अर्चिष्मते नमः
६३४ ,, अर्चिताय नमः
६३५ ,, कुम्भाय नमः
६३६ ,, विशुद्धात्मने नमः
६३७ ,, विशोधनाय नमः
६३८ ,, अनिरुद्धाय नमः
६३९ ,, अप्रतिरथाय नमः
६४० ,, प्रद्युम्नाय नमः
६४१ ,, अमितविक्रमाय नमः
६४२ ,, कालनेमिनिघ्ने नमः
६४३ ,, वीराय नमः
६४४ ,, शौरये नमः
६४५ ,, शूरजनेश्वराय नमः
६४६ ,, त्रिलोकात्मने नमः
६४७ ,, त्रिलोकेशाय नमः
६४८ ,, केशवाय नमः
६४९ ,, केशिघ्ने नमः
६५० ,, हरये नमः
६५१ ,, कामदेवाय नमः
६५२ ,, कामपालाय नमः
६५३ ,, कामिने नमः
६५४ ,, कान्ताय नमः
६५५ ,, कृतागमाय नमः
६५६ ,, अनिर्देश्यवपुषे नमः
६५७ ,, विष्णवे नमः
६५८ ,, वीराय नमः

